पुण्यज्यानिं कुर्वन्ति, ये विपरीतधर्मं देशयन्ति। क्लिष्टचित्ता वा लाभसत्कारयशांसि वाञ्छन्तः।

उक्तं पुण्यक्रियावस्तुभेदेन त्रिविधं कुशलम्॥

पुनः—

**पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा॥ १२५॥**

पुण्यभागीयं यदिष्टविपाकं मोक्षभागीयम्, यस्मिन्नुत्पन्ने नियतं परिनिर्वाणधर्मा भवति। यस्य संसारादीनवनैरात्म्यनिर्वाणगुणद्योतिकां कथां श्रुत्वा रोमहर्षाश्रुपातौ भवतः, तस्यास्ति मोक्षभागीयं कुशलमूलमित्यवसेयम्। प्रावृषीवाङ्कुरप्ररोहात् खलविलेषु बीजास्तित्वम्।

निर्वेधभागीयमूष्मादि चतुर्विधं पश्चाद् व्याख्यास्यामः॥ १२५॥

यदिदं लोक उच्यते लिपिमुद्रागणना काव्यं संख्येति, क एषां स्वभावः?

**योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा।**
**लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम्॥ १२६॥**

**योगप्रवर्तित**मिति उपायविशेषप्रवर्तितम्। **त्रिधा कर्मे**ति कायवाङ्मनस्कर्म। तत्र लिपिमुद्रे तावद् योगप्रवर्तितं कायकर्म ससमुत्थानम्[1]। **गणना काव्यं च**

---

इति द्वादशानामङ्गानाम्। *अक्लिष्टदेशने*ति। अक्लिष्टचित्तसमुत्थापितेत्यर्थः।

*पुण्यभागीय*मिति। पुण्यस्य भागः प्राप्तिरिति पुण्यभागः। इष्टफलप्राप्तिरित्यर्थः। तस्मै हितं पुण्यभागीयम्। अतएवोक्तम्—*यदिष्टविपाक*मिति। तत्प्राप्त्यनुकूलमिति। अथवा त्रयो भागाः—पुण्यो भागः, अपुण्यो भागः, अनिञ्ज्यो भागः; तस्मै हितं पुण्यभागीयम्। अथवा—पुण्यं भजत इति पुण्यभाक्, पुण्यभागेव पुण्यभागीयम्। स्वार्थे क-प्रत्ययः। एवं *मोक्षभागीयम्*। अथ वा संसारभागः, मोक्षभागश्चेति द्वौ भागौ। तत्र यन्मोक्षभागाय हितं *तन्मोक्षभागीयम्*। मोक्षप्राप्तिर्वा मोक्षभागः, तस्मै हितम् तत्प्राप्त्यनुकूलमिति मोक्षभागीयम्। तस्य लक्षणं पश्चाद् वक्ष्यते। एवं *निर्वेधभागीयमपि* योज्यम्। *पश्चाद् व्याख्यास्याम* इति। "तत ऊष्मगतोत्पत्तिः" ( अभि० को० ६.१७ ) इत्यत्र। कर्माधिकारेणैषां कर्मस्वभावानां लक्षणमुच्यते॥ १२५॥

*यदिदं लोक* इत्यादि। *ससमुत्थान*मिति। सचित्तचैतसिककलापम्। येन तत् कायकर्मोत्थाप्यते। तत् *कायकर्मससमुत्थानं योगप्रवर्तितम्*। *लिपिर्मुद्रा*

---

१. समुत्थापनम्—का०।

वाक्कर्म । इत्येतानि पञ्चस्कन्धस्वभावानि । **संख्या** मनस्कर्म, **यन्मनसा सङ्कलनं धर्माणाम्** ॥ १२६ ॥

धर्माणामिदानीं केचित् पर्याया उच्यन्ते—

**सावद्या निवृता हीनाः क्लिष्टा धर्माः,**

क्लिष्टानां धर्माणां **सावद्या निवृता हीना** इति पर्यायाः ।

**शुभामलाः ।**

**प्रणीताः,**

कुशलानास्रवाणां **प्रणीता** इति पर्यायः ।

हीनप्रणीतेभ्योऽन्ये मध्या इति सिद्धं भवति ।

**संस्कृतशुभाः सेव्याः,**

---

च। कारणे कार्योपचारात् । येन हि कायकर्मणा लिपिर्लिख्यते, मुद्रा वा खन्यते, सा *लिपिर्मुद्रा* च शास्त्रेऽभिप्रेते; न यथा लोके ह्यक्षरचिह्नं पुस्तकादौ लिपिरिष्यते । अक्षरानक्षरचिह्नं च मुद्रेति । *गणना काव्यञ्च वाक्कर्म* । योगप्रवर्तितं ससमुत्थानमिति वर्तते । *पञ्चस्कन्धस्वभावानीति* । लिपिमुद्रयोः कायकर्म रूपस्कन्धः । गणनाकाव्ययोर्वाक्कर्म रूपस्कन्धः । वेदनादयस्तूभयत्रापि समुत्थानभूताश्चत्वारः स्कन्धा इति । पञ्चस्कन्धस्वभावान्येतानि भवन्ति । *यन्मनसा संकलनं धर्माणामिति* । एकं द्वे त्रीणीत्येवमादि सा संख्या । यत्तु वाचा न मनसा सा गणनेत्या*भिधार्मिकाः* । इयं च संख्या सपरिवारग्रहणाच्चतुःस्कन्धस्वभावा ॥ १२६ ॥

लिप्यादिलक्षणनिर्देशानुषङ्गेण सावद्यादीनामपि *धर्माणां* लक्षणनिर्देशोपन्यासः । धर्मस्कन्धक*विभाषाया*मेते पर्याया निर्दिष्टाः । तत्प्रत्यासन्नेयमिति । इमे *पर्याया* उपन्यस्यन्त इत्यपरः सम्बन्धः । सहावद्येन क्लेशलक्षणेन वर्तन्त इति *सावद्याः* । क्लेशच्छादितत्वान्*निवृताः* । क्लेशा अपि हि सम्प्रयोगिणा क्लेशान्तरेण निवृताः । निष्कृष्टत्वादार्यैस्त्यक्तत्वाद् वा *हीनाः* । *क्लिष्टास्तु* क्लेशयोगतोऽवगन्तव्याः ।

*शुभामलाः* । कुशलानास्रवाः । ते *प्रणीताः* । शुद्धिप्रकर्षगतत्वात् । *हीनप्रणीतेभ्योऽन्ये मध्या इति सिद्धमिति* । क्लिष्टा एव हीनाः । शुभामला एव च प्रणीता इत्यवधारणादतोऽन्ये न हीनाः । न प्रणीता इति मध्याः सिद्धाः ।

*संस्कृतशुभाः सेव्या* इति । अविशेषेण सास्रवा अनास्रवा वा सेवितव्याः ।

कुशलसंस्कृतानां सेवितव्या इति पर्यायः। शेषा असेवितव्या इति सिद्धं भवति।

कस्मादसंस्कृतं न सेव्यम्? अनभ्यसनीयत्वाद्, अफलत्वाच्च। फलार्थं हि सेवा भवति॥

सोत्तरा अन्ये सर्वधर्माः।

**मोक्षस्त्वनुत्तरः ॥ १२७ ॥**

नहि निर्वाणाद् विशिष्टतरमस्ति। तच्च सर्वेभ्यो विशिष्टम्; कुशलनित्यत्वात् ॥ १२७ ॥

अभिधर्मकोशभाष्ये कर्मनिर्देशो नाम
चतुर्थं कोशस्थानमिति ॥

---

पर्युपासितव्याः। सन्तानाध्यारोपणतः। *शेषा असेवितव्या* इति। के शेषाः? असंस्कृताश्च, ये च न कुशलाः। क्लिष्टा निवृताव्याकृता इत्यर्थः।

*अनभ्यसनीयत्वादि*ति। पौनःपुन्येन कर्तुमशक्यत्वादित्यर्थः। अनुत्पाद्यत्वादित्यपरे। *अफलत्वाच्चे*ति। संस्कृतस्य हि हेतुफले। नासंस्कृतस्य ते इति। *सोत्तरा* इति सातिशयाः। अकुशला निवृताव्याकृतानामनिष्टविपाकाभावात्। निवृताव्याकृता अनिवृताव्याकृतैः संस्कृताः सोत्तरा; तेषामक्लिष्टत्वात्। तेऽपि कुशलसास्रवैः सोत्तराः; कुशलसास्रवाणामिष्टफलत्वात्। तेऽप्यनास्रवैः सोत्तराः; निष्क्लेशत्वात्। अनास्रवा अपि संस्कृता असंस्कृतैः सोत्तरा; असंस्कृतानां नित्यत्वात्। संस्कृतावप्याकाशाप्रतिसंख्यानिरोधौ प्रतिसंख्यानिरोधेन सोत्तरौ; प्रतिसंख्यानिरोधस्य कुशलनित्यत्वात्।

**मोक्षस्त्वनुत्तरः**। न हि *निर्वाणाद् विशिष्टतममस्ति*। तथा ह्युक्तम्—"ये केचिद् भिक्षवो धर्माः संस्कृता वा असंस्कृता वा विरागस्तेषामग्र आख्यायते" (        ) इति। प्रतिसंख्यानिरोधो हि नित्यत्वात् सर्वसंस्कृतेभ्य उत्कृष्टः। कुशलत्वाच्चासंस्कृताभ्यामाकाशाप्रतिसंख्यानिरोधाभ्यामुत्कृष्टतर इति ॥१२७॥

आचार्ययशोमित्रकृतायां स्फुटार्थायामभिधर्मकोशव्याख्यायां
चतुर्थकोशस्थानं समाप्तम् ॥

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ।।